॥ श्रीगुरुभ्यो नमः ॥ ॥ श्रीमहागणाधिपतये नमः ॥

# ॥ शिवरहस्योक्त गणेशकृत रुद्रनमक & चमकम् ॥



ततः प्रणम्य बहुधा कृतांजलिपुटः प्रभुं ।
शंभु स्तोतुं मतिं चक्रे सर्वाभीष्टप्रदायकम् ॥
गणाधीशउवाच ॥ **नमकः** ॥ नमस्ते देवदेवाय नमस्ते रुद्रमन्यवे ।
नमस्ते चंद्रचूडायाप्युतोत इषवे नमः ॥१॥
नमस्ते पार्वतीकान्त नमस्ते मेरुधन्वने ।
नमस्ते भगवान् शंभो बाहुभ्यामुत ते नमः ॥२॥
इषुः शिवतमा या ते तया मृडय रुद्र मां ।
शिवं धनुर्यद्बूव तेनापि मृडयाधुना ॥३॥
शरव्या या शिवतमा तयापि मृडया प्रभो ।
या ते रुद्र शिवा नित्यं सर्वमङ्गळसाधनम् ॥४॥
तयाभिचाकशीहि त्वं तनुवा मामुमापते ।
अघोरयापि तनुवा रुद्राद्या पापकाशिनी ॥५॥
या तया मृडय स्वामिन् सदा शन्तमया प्रभो ।
गिरिशन्तं महारुद्र हस्ते यामिषु मस्तवे ॥६॥

बिभर्षि तां गिरित्राद्य शिवां कुरु शिवांपते ।
शिवेन वचसा रुद्र नित्यं त्वाच्छादयामसि ॥७॥
त्वद्भक्तिपरिपूतांगं मा हिंसीः पुरुषं जगत् ।
यन्नः शर्व जगत्सर्वमयक्ष्म सुमनाभवत् ॥८॥
यथा तथाव मां रुद्र तदन्यदपि मे प्रभो ।
रुद्र त्वं प्रथमो दैव्यो भिषक् पाप विनाशकः ॥९॥
अधिवक्ताध्यवोचन्मा भवलिंगार्चकं मुदा ।
अहीन् सर्वान्यातुधान्यः सर्वा अप्यद्य जंभयन् ॥१०॥
असौ ताम्रोऽरुणो बभ्रुः नीलग्रीवो सुमंगलः ।
विलोहितोऽस्त्ययं शंभो त्वदधिष्ठानमेव हि ॥११॥
नमो नमस्ते भगवन्नीलग्रीवाय मीढुषे ।
सहस्राक्षाय शुद्धाय सच्चिदानन्द मूर्तये ॥१२॥
उभयोरार्त्नियोर्ज्याया धन्वनस्तां प्रमुंचतां ।
संप्राप्य धनुरन्येषां भयाय प्रभविष्यति ॥१३॥
अस्मद्भय विनाशार्थमधुना भयद प्रभो ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥१४॥
अवतत्य धनुस्तत्वं सहस्राक्ष शतेषुधे ।
मुखा निशीर्य शल्यानां शिवो नः सुमना भव ॥१५॥
विज्यं धनुरिदं भूयाद्विशल्यो बाणवानपि ।
अनेशन्निषवोऽप्यस्याप्याभुरस्य निषंगथिः ॥१६॥
कपर्दिनो महेशस्य यदि नाभूर्निषंगदीः ।
इषवोऽपि समर्थाश्चेत्साग्रत्वेन भयं भवेत् ॥१७॥
या ते हेतिर्धनुर्हस्ते मीडुष्टुम बभूव या ।
तयास्मान्विश्वतस्तेन पालय त्वमयक्ष्मया ॥१८॥

अनाततायायुधाय नमस्ते धृष्णवे नमः ।
बाहुभ्यां धन्वने शंभो नमो भूयो नमो नमः ॥१९॥
परि ते धन्वनो हेतिर्विश्वतोऽस्मान् वृणक्तु सः ।
इषुधिस्तव यस्तावदस्मदारे निधेहि तम् ॥२०॥
हिरण्य बाहवे तुभ्यं सेनान्ये ते नमो नमः ।
दिशां च पतये तुभ्यं पशूनां पतये नमः ॥२१॥ ६७
त्विषीमते नमस्तुभ्यं नमस्सस्पिंजरायते ।
नमः पथीनां पतये बभ्लुषाय नमो नमः ॥२२॥
नमो विव्याधिनेन्नानां पतये प्रभवे नमः ।
नमस्ते हरिकेशाय रुद्रायास्तूपवीतिने ॥२३॥
पुष्टानां जगते तुभ्यं जगतां पतये नमः ।
संसारहेतिरूपाय रुद्रायाप्याततायिने ॥२४॥
क्षेत्राणां पतये तुभ्यं सूताय सुकृतात्मने ।
अहंत्याय नमस्तुभ्यं वनानां पतये नमः ॥२५॥
रोहिताय स्थपतये मन्त्रिणे वाणिजाय च ।
कक्षाणां पतये तुभ्यं नमस्तुभ्यं भुवन्तये ॥२६॥
तद्वारिवस्कृतायास्तु महादेवाय ते नमः ।
ओषधीनां च पतये नमस्तुभ्यं महात्मने ॥२७॥
उच्चैर्घोषाय धीराय धीराक्रन्दयते नमः ।
पत्तीनां पतये तुभ्यं कृत्स्नवीताय ते नमः ॥२८॥
धावते धवलायापि सत्वानां पतये नमः ।
नमस्ते सहमानाय तुभ्यं विव्याधिने नमः ॥२९॥
आव्याधिनीनां पतये ककुभाय निषंगिणे ।
सेनानां पतये तुभ्यं दिव्येषुधिमते ॥३०॥

तस्कराणां च पतये वंचते परिवंचते ।
स्तायूनां पतये तुभ्यं नमस्तेस्तु निचेरवे ॥३१॥
नमः परिचरायापि महारुद्राय ते नमः ।
आरण्यानां च पतये मुष्णतां पतये नमः ॥३२॥
उष्णीषिणे नमस्तुभ्यं नमो गिरिचराय ते ।
कुलुंचानांच पतये नमस्तेस्तु भवाय च ॥३३॥
नमो रुद्राय शर्वाय तुभ्यं पशुपतये नमः ।
नम उग्राय भीमाय नम अग्रेवधाय च ॥ ३४॥
नमो दूरेवधायापि नमो हन्त्रे नमो नमः ।
हनीयसे नमस्तुभ्यं नीलग्रीवाय ते नमः ॥३५॥
नमस्ते शितिकंठाय नमस्तेस्तु कपर्दिने ।
नमस्ते व्युप्तकेशाय सहस्राक्षाय मीढुषे ॥३६॥
गिरिशाय नमस्तेऽस्तु शिपिविष्टाय ते नमः ।
नमस्ते शंभवे तुभ्यं मयोभव नमोस्तुते ॥३७॥
मयस्कर नमस्तुभ्यं शंकराय नमो नमः ।
नमः शिवाय शर्वाय नमः शिवतराय च ॥ ३८॥
नमस्तीर्थ्याय कूल्याय नमः पार्याय ते नमः ।
अवार्याय नमस्तेऽस्तु नमः प्रतरणाय च ॥३९॥
नम उत्तरणायापि हरायार्ताय ते नमः ।
आलाद्याय नमस्तेऽस्तु भक्तानां वरदाय च ॥४०॥
नमः शष्प्याय फेन्याय सिकत्याय च नमो नमः ।
प्रवाह्याय नमस्तेऽस्तु ह्रस्वायास्तु नमो नमः ॥४१॥
वामनाय नमस्तेऽस्तु नमोऽस्तु बृहते नमः ।
वर्षीयसे नमस्तेऽस्तु नमो वृद्धाय ते नमः ॥४२॥

संवृध्वने नमस्तुभ्यमग्रियाय नमो नमः ।
प्रथमाय नमस्तुभ्य माशवे चाजिराय च ॥४३॥
शीघ्रियाय नमस्तुभ्यं शीभ्याय च नमो नमः ।
नम ऊर्व्याय सूर्म्यायप्यवस्वन्याय ते नमः ॥४४॥
स्रोतस्याय नमस्तुभ्यं द्वीप्याय च नमो नमः ।
जेष्ठाय च नमस्तुभ्यं कनिष्ठाय च ते नमः ॥४५॥ ९०
पूर्वजाय नमस्तुभ्यं नमोस्त्वपरजाय च ।
मध्यमाय नमस्तुभ्यमफगल्फाय ते नमः ॥४६॥
जघन्याय नमस्तुभ्यं बुध्नियाय नमो नमः ।
सोभ्याय प्रतिसर्याय याम्याय च नमो नमः ॥४७॥
क्षेम्याय च नमस्तुभ्यं याम्याय च नमो नमः ।
उर्वर्याय नमस्तुभ्यं खल्याय च नमो नमः ॥४८॥
श्लोक्याय चा वसान्यायावस्वन्याय च ते नमः ।
नमो वन्याय कक्ष्याय मौंज्याय च नमो नमः ॥४९॥
श्रवायच नमस्तुभ्यं प्रतिश्रव नमो नमः ।
आशुषेणाय शूराय नमोऽस्त्वाशुरथाय च ॥५०॥ ९५
वरूथिने वर्मिणे च बिल्मिने च नमो नमः ।
प्रहिताय नमस्तुभ्यं धृष्णवे प्रहिताय च ॥५१॥
पाराय पारविंदाय नमस्तीक्ष्णेषवे नमः ।
सुधन्वने नमस्तुभ्यं स्वायुधाय नमो नमः ॥५२॥
नमः श्रुत्याय पथ्याय नमः काव्याय ते नमः ।
नमो नीप्याय सूद्याय सरस्याय च ते नमः ॥५३॥
नमो नाद्याय भव्याय वैशन्ताय च ते नमः ।
अवट्याय नमस्तुभ्यं नमः कूप्याय ते नमः ॥५४॥

अवर्ष्याय च वर्ष्याय च मेघ्याय च नमो नमः ।
विद्युत्याय नमस्तुभ्यमीद्रीयाय नमो नमः ॥५५॥
आतप्याय नमस्तुभ्यं वात्याय च नमो नमः ।
रेष्म्याय च नमस्तुभ्यं वास्तव्याय च ते नमः ॥५६॥
वास्तुपाय नमस्तेऽस्तु नमः सोमाय ते नमः ।
नमो रुद्राय ताम्रायाप्यरुणाय च ते नमः ॥५७॥
नम उग्राय भीमाय नमः शंगाय ते नमः ।
नमस्तीर्थ्याय कूल्याय सिकत्याय च ते नमः ॥५८॥ १०४
प्रवाह्याय नमस्तुभ्यमिरिण्याय च ते नमः ।
नमस्ते चंद्रचूडाय प्रपथ्याय च ते नमः ॥५९॥
किंशिलाय नमस्तेस्तु क्षयणाय च ते नमः ।
कपर्दिने नमस्तेऽस्तु नमस्तेऽस्तु पुलस्तये ॥६०॥
नमो गोष्ठ्याय गृह्याय ग्रहाणां पतये नमः ।
नमस्तल्प्याय गेहाय गुहावासाय ते नमः ॥६१॥
काट्याय गह्वरेष्ठाय ह्रदयाय च ते नमः ।
निवेष्प्याय नमस्तुभ्यं पांसव्याय च ते नमः ॥६२॥
रजस्याय नमस्तुभ्यं परात्परतराय च ।
नमस्ते हरिकेशाय शुष्क्याय च नमो नमः ॥६३॥
हरित्याय नमस्तुभ्यं हरिद्वर्णाय ते नमः ।
नम ऊर्म्याय सूर्म्याय पर्ण्याय च नमो नमः ॥६४॥
नमोऽपगुरमाणाय पर्णशद्याय ते नमः ।
अभिघ्नते चाख्खिदते नमः प्रख्खिदते नमः ॥६५॥
विश्वरूपाय विश्वाय विश्वाधाराय ते नमः ।
त्रियंबकाय रुद्राय गिरिजापतये नमः ॥६६॥

मणिकोटीरकूटस्थकान्तिदीप्ताय ते नमः ।
वेदवेदान्तवेद्याय वृषारूढाय ते नमः ॥६७॥
अविज्ञेयस्वरूपाय सुन्दराय नमो नमः ।
उमाकान्तनमस्तेऽस्तु नमस्ते सर्वसाक्षिणे ॥६८॥
हिरण्यबाहवे तुभ्यं हिरण्याभरणाय च ।
नमो हिरण्यरूपाय रूपातीताय ते नमः ॥६९॥
हिरण्यपतये तुभ्यं अंबिकापतये नमः ।
तदुमापतये तुभ्यं नमः पापप्रणाशक ॥७०॥
मीडुष्टमाय भर्गाय कद्रुद्राय प्रचेतसे ।
तव्यसे बिल्वपूज्याय नमः कल्याणरूपिणे ॥७१॥
अपारकल्याणगुणार्णवाय श्रीनीलकंठाय निरंजनाय ।
कालान्तकायापि नमो नमस्ते दिक्कालरूपाय नमो नमस्ते ॥७२॥
वेदान्तवेदिस्तुतसद्गुणाय गुणप्रवीण गुणाश्रयाय ।
श्रीविश्वनाथाय नमो नमस्ते काशीनिवासाय नमो नमस्ते ॥७३॥
अजातसौन्दर्यसुधानिधान समृद्धिरूपाय शिवाधवाय ।
धाराधराकार नमो नमस्ते धारा स्वरूपाय नमो नमस्ते ॥७४॥
नीहारतारकरकाकराग प्रकारहाराप्रतिहारकाय ।
वीरेश्वरापारदयानिधान पाहिप्रभो पाहि नमो नमस्ते ॥७५॥

**स्वस्ति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे गणेशकृत रुद्राध्याय स्तुतिर्नाम दशमः ॥**

**॥ सांबसदाशिवार्पण मस्तु ॥**

## ॥ चमकः ॥

नमो नमस्ते गिरिजा सहाय नमो नमस्ते सुकृत स्वरूप ।
नमो नमस्तेऽन्नपते महेश नमो नमस्तेऽस्तु नमो नमस्ते ॥१॥
त्वत्पादांबुजभक्तिर्मे निश्चला भवतु प्रभो ।
त्वमेव शरणं शंभो गतिस्त्वं जगतां प्रभो ॥२॥
कर्माण्यस्य फलोन्मुखानि भगवंस्त्वत्पादपद्मं यतो
दृष्टं दोषविवर्जितं सुखयुतं तावत्करोति स्वतः ।
तत्तावन्मुनिवृंदमानसमनःपद्मप्रविष्टं प्रभो
तन्मे मानस पंकजे क्षणमिति स्वामिन् मुदे जायताम् ॥३॥
वाजश्चमेऽस्तु प्रसवश्चमेऽस्तु त्वत्पूजया सा प्रयतिश्च मेऽस्तु ।
महेश्वराशु प्रसितिश्च मे स्तु ध्वीतिश्चमेऽस्तु क्रतुरस्तु शंभु ॥४॥
स्वरश्च मेऽस्तु वरदेश शंभो श्लोकश्चमेऽस्तु श्रुतिगीतकीर्ते ।
श्रावश्चमेऽस्तु श्रुतिरस्तु शंभो शिवभिधानश्रवणाय नित्यम् ॥५॥
ज्योतिश्चमेऽस्तु ज्वलन स्वरूप सुवश्चमेऽस्तु त्रिपुरासुरारे ।
प्राणश्चमे तावदपानयुक्तो व्यानश्चमेऽसुश्च तथैव चित्तम् ॥६॥
अधीतं च तथा वाक्च मनश्चक्षुश्च मे प्रभो ।
श्रोत्रं दक्षो बलं चोजः सहश्चायुश्च मे प्रभो ॥७॥
जरा चात्मा च मे शंभो तनूश्शर्म च वर्म च ।
अंगान्यस्थीनि भगवन् परूंषि च भवन्तु मे ॥८॥
शरीराणि भवन्त्वीश तानि रम्याणि मे प्रभो ।
ज्येष्ठ्यं च मेऽधिपत्यं च मनुर्भामश्च मे प्रभो ॥९॥
अमश्चांबश्च जेमा च महिमा वरिमा च मे ।
प्रथिमा चास्तु गौरीश वर्ष्मा च द्राघुया च मे ॥१०॥
वृद्धं वृद्धिश्च सत्यं च श्रद्धा चास्तु जगच्च मे ।
धनं वशास्त्वहिश्चास्तु क्रीडा मोदश्च मे प्रभो ॥११॥

जातं जनिष्यमाणं च सूक्तं मे सुकृतं च मे ।
वित्तं वेद्यं च भूतं च भविष्यं च सुगं च मे ॥१२॥
सुपथं ऋद्धमृद्धिश्च क्लुप्तं क्लुप्तिश्च मे मतिः ।
सुमतिः शं मयश्चास्तु प्रियं चास्तु शिवाशु मे ॥१३॥
अनुकामश्च कामश्च शंभो सौमनसं च मे ।
भद्रं श्रेयश्च वस्यश्च यशो मे सुभगश्च मे ॥१४॥
द्रविणं चास्तु यन्ता च धर्ता क्षेमश्च मे धृतिः ।
विश्वं महश्च संविच्च ज्ञात्रं सूश्च प्रसूश्च मे ॥१५॥
शीरं रयो ऋतं चास्तु भगन्नमृतं च मे ।
अयक्ष्मं चानामयच्च जीवातु श्चास्तु मे सदा ॥१६॥
दीर्घायुत्वानमित्रं च सर्वदाप्यभयं च मे ।
सुगं च शयनं सूषा सुदिनं चास्तु मे सदा ॥१७॥
ऊर्क्चमे सूनृता चास्तु पयश्चास्तु रसश्च मे ।
घृतं मधु च सग्धिश्च सपीतिश्च कृषिश्च मे ॥१८॥
वृष्टिश्च चैत्रमौद्भिद्यं रयिश्चास्तु सदापि मे ।
रायः पुष्टं च पुष्टिश्च विभु च प्रभु च प्रभो ॥१९॥
बहु भूयश्च पूर्णं च तथा पूर्णतरं च मे ।
अक्षितिश्चास्तु भगवन्नूयवाश्च भवन्तु मे ॥२०॥
अन्नमन्नपते मेस्तु केनास्तु क्षुश्च मे प्रभो ।
व्रीहयश्च यवा माषास्तिलामुद्गाश्च मे शिव ॥२१॥
खल्वाश्च सन्तु गोधूमा मसुराश्च प्रियंगवः ।
अणवः सन्तु मे नित्यं श्यामाकाः सन्तु मे प्रभो ॥२२॥ १३८
नीवाराद्याश्च मे सन्तु गृहे सर्वान्ननायक ।
अश्मा च मृत्तिका चास्तु गिरयः पर्वताश्च मे ॥२३॥

सिकताः सन्तु भगवन्मे वनस्पतयश्च मे ।
हिरण्यमस्त्वयश्चास्तु तथा सीसं त्रपुश्च मे ॥२४॥
श्यामं लोहं च मेग्निश्च गृहे तिष्ठन्तु सर्वदा ।
आपश्च वीरुधः संतु तथैवोषधयोऽपि मे ॥२५॥
कृष्टवच्यं च बहुधा मम तिष्ठतु वेश्मनि ।
तथैवाकृष्टपच्यं च वनसंभवमस्तु ॥२६॥ १४२
गोमहिष्यादयो ग्राम्याः पशवः सन्तु मे गृहे ।
सदा यज्ञेन कल्पन्तामारण्याः पशवश्च मे ॥२७॥
वित्तं वित्तिश्च भूतं भूतिश्च वसतिर्वसु ।
शिवपूजादिकं कर्म शक्तिश्च शिवपूजने ॥२८॥
एमश्चास्तु ममेतिश्च गतिश्चास्तु शिवार्चने ।
अग्निरिन्दुश्च मे सोमः सविता च सरस्वती ॥२९॥
पूषा बृहस्पतिर्मित्रस्त्वष्टा च वरुणश्च मे ।
धाता विष्णुरप्यस्तु गृहकर्मरस्तु मे ॥३०॥
अश्विनौचममेशान तिष्ठतां सर्वदा गृहे ।
मरुतश्च प्रसर्पंतु विश्वेदेवाश्च मे गृहे ॥३१॥
त्वदाज्ञावशगानेतानग्नींद्रादिसुरान् शिव ।
मद्वशान्कुरु विश्वेश दक्षान्मद्गृहकर्मणि ॥३२॥
अन्तरिक्षं च पृथिवी द्यौरप्यस्तु दिशश्च मे ।
मूर्धा प्रजापतिश्चास्तु मे भवत्कृपया भव ॥३३॥
अंशुश्च रश्मिरप्यस्तु मेधाभ्योऽधिपतिश्च मे ।
उपांशुरन्तर्यामश्च ममस्यादैन्द्रवायवः ॥३४॥
मे मैत्रावरुणश्चास्तु तथैवास्तु ममाश्विनः ।
प्रतिप्रस्थानशुक्रौ च मंथी चाग्रयणश्च मे ॥३५॥ १५१

वैश्वदेवो ध्रुवश्चापि तथा वैश्वानरश्च मे ।
ऋतुग्रहाश्च मे सन्तु सातिग्राह्याश्च शंकर ॥३६॥
ऐन्द्राग्नौ वैश्वदेवश्च ग्रहाः सोमोपयोगिनः ।
तथा मरुत्वतीयाश्च ग्रहाः सन्तु सदापि मे ॥३७॥
माहेन्द्रश्च तथादित्यः सावित्रश्चास्तु मे ग्रहाः ।
सारस्वतश्च पौष्णश्च तथा पात्नीवतश्च मे ॥३८॥
स हारियोजनश्चास्तु ममेध्मश्चास्तु सर्वदा ।
बर्हिर्वेदिश्च धिष्णियाश्च स्रुचश्च चमसाश्च मे ॥३९॥
ग्रावाणः स्वरवः सन्तु तथैवोपरवाश्च मे ।
ते मे धिषवणे सन्तु ते द्रोणकलशश्च मे ॥४०॥
वायुव्यानि च मे सन्तु पूताभृच्चास्तु मे प्रभो ।
तथैवाधवनीयश्च तदाग्नीद्रं च मे प्रभो ॥४१॥
हविर्दानं च मे स्वामिन्गृहाश्चैव सदश्च मे ।
पुरोडाशाश्च मे स्वामिन्पचताश्च भवन्तु मे ॥४२॥
तथैवावभृतः सन्तु स्वगाकारश्च मे प्रभो ।
अग्निर्घर्मश्च मेर्कश्च सूर्यः प्राणश्च मे प्रभो ॥४३॥
अश्वमेधश्च पृथिवी द्यौरप्यदिरस्तु मे ।
मे शक्वरीरंगुलयो दिशश्च विदिशश्च मे ॥४४॥
तथा यज्ञेन कल्पंतां ऋक्च साम च मे प्रभो ।
स्तोम यजुश्च दीक्षा च तपश्चास्तु ऋतुश्च मे ॥४५॥
व्रतं चाहोरात्रयोर्यद्वृष्ट्या तु नियमात्मकं ।
बृहद्रथन्तरे यज्ञे कल्पेतां फाललोचन ॥४६॥
गर्भा वत्सश्च भगवन्त्र्यविश्चास्तु महेश्वर ।
त्र्यवी च मे दित्यवाट्च दित्याही च सदाशिव ॥४७॥

पंचाविश्च महादेव पंचावी च त्रिलोचन ।
त्रिवत्सश्च त्रिवत्सा च तुर्यवाट्चैव मे प्रभो ॥४८॥
तुर्यौही षष्ठवाच्चास्तु षष्ठौही च महेश्वर ।
उक्षा वंशा च ऋषभो वेहन्नड्वान् तथास्तु मे ॥४९॥
धेनुरप्यस्तु भगवन्क्षीरायाति मनोहर ।
यज्ञेन कल्पतामायुः प्राणो यज्ञेन कल्पताम् ॥५०॥
अपानोऽपि स यज्ञेन व्यानेन सह कल्पतां ।
चक्षुः श्रोत्रं च यज्ञेन मनसा सह कल्पताम् ॥५१॥
वागात्मापि तथा यज्ञोप्येवं यज्ञेन कल्पतां ।
त्वदधीनमिदं सर्वं तवेति प्रार्थितं मया ॥५२॥
सर्वस्वतंत्रोऽसि महेश यस्मा त्त्वमेव दातासि तवापि देयाः ।
उक्ताश्च तावच्चमकेन देहि तान स्वतन्त्रांछिवपूजकाय ॥५३॥
तेषां प्रदेयत्वविनिश्चयेन तां देहि मह्यं शिवपूजकाय ।
ते तावतस्मद्गृहकर्मयोग्याः योग्येन योगस्य किलान्वयोपि ॥५४॥
एते पदार्थाः प्रथितास्त्वदीयास्ते शर्वदेया स्तव दानयोग्याः ।
अहं शिवाराधन सक्तचित्तः कोऽवा मदन्योस्ति स दानयोग्यः ॥५५॥
दातापि देये सति दानयोग्यं विहाय कस्मैप्रददाति भक्त्या ।
विद्वानतो देहि महेश तान्मे लोके मदन्यस्तु न कोऽपि पात्रम् ॥५६॥
त्वद्दत्तमेतादृशभाग्यमेत्य त्वत्पादपूजानिरतो भवानि ।
प्रमादलेशोऽपि तदा न बावि भवे भवे त्वत्पदपूजकस्य ॥५७॥
महाप्रभुः शंभुरुमासहायो दयामयो भूतिमयोऽपिदाता ।
माता पिता मे स हित प्रदाता धाता विधाता परमोतसंदृक् ॥५८॥

मन्ये शंकर देवदेव तव तद्दातृत्वमव्याहतं
तेनाग्निप्रमुखान्सुरानपि सदा तान्न स्वतंत्रान्स्वतः ।
मह्यं देहि मदिच्छया परमिमा कुर्वन्तु कृत्यानि मे
शक्तिर्यस्य यथा यथास्ति भगवन्सर्वस्वतन्त्र प्रभो ॥५९॥
देयत्वेन विनिश्चितास्तवसुराः सर्वेऽपि वेदैरपि
दाता त्वं तव भाग्यमप्यविलयं भूयः समुज्जृंभते ।
अस्माकं तु महाप्रभुर्भवानैवेति चित्तं मुहुः
स्वानंदांबुधिवीचिकातिचपला लीलाविलासास्पदम् ॥६०॥

**॥ स्वस्ति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शिलाद कृत चमक विधान प्रार्थनं चतुस्त्रिंशः ॥**

# ॥ सांबसदाशिवार्पण मस्तु ॥


B. N. Shrinath Udupa
"TRIPURASHRI" #2/217
Karikall katte - Japthi 576211
Kundapur Tq Udupi DT
Cell:- +91-9740069904
Email:- shrinath.udupa@gmail.com